सरस्वतीभवन-अध्ययनमाला

[ ११ ]

रामाज्ञापाण्डेयविरचिता

# व्याकरणदर्शनभूमिका



[ द्वितीयं संस्करणम् ]

VHP 3.1




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

SARASVATĪBHAVANA-STUDIES

[Vol. 11]

# VYĀKARAṆADARŚANABHŪMIKĀ

OF

**PT. RĀMĀJÑĀ PĀṆḌEYA**

Edited by

**GAURINATH SASTRI**




Research Publication Supervisor
DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ 'VĀGĪŚA ŚĀSTRĪ'
Director, Research Institute
Sampurnanand Sanskrit Vishvavidyalaya

VARANASI

1982

Published by—
Director Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi.

[This book has been published out of generous grant from University Grants Commission, New Delhi]

Available at—
**Sales Department**
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi-221002 (India)

Second Edition : 1000 Copies
Price—Rs. 28-00

Printed by
Tara Printing Works,
Varanasi.

सरस्वतीभवन-अध्ययनमाला

[ ११ ]

रामाज्ञापाण्डेयविरचिता

# व्याकरणदर्शनभूमिका

सम्पादकः
श्रीगौरीनाथशास्त्री
कुलपतिः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य




अनुसन्धानप्रकाशनपर्यवेक्षकः
डाॅ. भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
अनुसन्धानसंस्थाननिदेशकः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणस्याम्

२०३९ तमे वैक्रमाब्दे　१९०४ तमे शकाब्दे　१९८२ तमे खैस्ताब्दे

# प्रस्तावना

पण्डितप्रवरवैयाकरणमूर्धन्यश्रीरामाज्ञापाण्डेयविरचितस्य व्याकरणदर्शनभूमिकाभिधानस्य ग्रन्थरत्नस्य सम्पादनेन मम स्वान्तं नितरां प्रसीदति। यतो हि विश्वस्य सनातनं सर्वविध-कल्याणसाधकं च साहित्यं मन्त्रब्राह्मणात्मको वेद एव। व्याकरणं तस्याङ्गतया प्रख्यातमस्ति। तथा हि गोपथब्राह्मणे 'षडङ्गविदस्तत्तथा धीमहे'[1] इत्युक्त्या 'ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च'[2] इति महाभाष्योक्त्या च वेदस्य षट्संख्याकानि अङ्गानि सन्तीति ज्ञायते। तानि च—शिक्षा, कल्पः, निरुक्तम्, छन्दः, ज्योतिषम्, व्याकरणं च प्रसिद्धान्येव। उक्तं च—

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते[3]॥ इति।

अपरं चास्य व्याकरणस्याङ्गान्तरापेक्षया प्राधान्यमप्युक्तं भगवता भाष्यकृता—'प्रधानं च षट्सु अङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति'[4] इति।

एवं च यथा शरीरस्य रक्षार्थमङ्गानां महती आवश्यकताऽस्ति, तथैव वेदानां स्वरूपस्य तदर्थस्य चावगमाय शिक्षाद्यङ्गानामस्ति महत्प्रयोजनम्; किं पुनस्तत्र मुखस्थानीयस्य व्याकरणस्य।

'अथ किमिदं व्याकरणम्? किं च तस्य दर्शनत्वम्?' व्याकरणमस्ति वेदस्यान्यतमं महनीयमङ्गं सप्रयोजनं चेति ज्ञातम्। इदानीं तल्लक्षणनिर्वचनेन विशेषतः स्वरूपं जिज्ञासित-मस्ति। तन्निरूप्य दर्शनस्य लक्षणम्, व्याकरणे दर्शनत्वसंघटनं च विधास्यते।

तत्र व्याक्रियन्ते, साधुशब्देभ्यः साधुशब्दाः पृथक्क्रियन्ते (पृथक्कृत्य ज्ञायन्ते) येन तद् व्याकरणमिति करणव्युत्पत्त्या असाधुशब्दावधिकसाधुशब्दकर्मकपृथक्कृतिपूर्वकसाधुशब्दविषयक-ज्ञानकरणं व्याकरणमित्यर्थो योगशक्त्या लभ्यते। यथा—गावी, गोणी, गोता इत्यादिभ्योऽ-साधुशब्देभ्यो गो इति साधुशब्दस्य पृथक्कृत्य बोधनं व्याकरणशास्त्राधीनम्। पृथक्कृतिश्च 'गच्छतीति गौः', 'गमेर्डो प्रत्ययः कर्तरि औणादिकः' इत्येवं प्रकृतिप्रत्ययविश्लेषणपूर्विका।

एवं च साधुशब्दबोधकशास्त्रत्वं शब्दगतसाधुत्वबोधकशास्त्रत्वं वा व्याकरणस्य लक्षणं पर्यवसितम्। इतरत् सर्वमसाधुशब्दज्ञानं प्रकृतिप्रत्ययादिज्ञानं परिचायककोटावेव प्रविष्टम्, न तु लक्षणशरीरे निविष्टम्। डित्थादिशब्दे प्रकृत्यादिकल्पनायाः प्रायोऽदर्शनात्।

---

१. गो० ब्रा० पू० १–२७।
२. म० भा० पस्पशा० १-१।
३. पाणिनीयशिक्षा–४१-४२।
४. म० भा० पस्पशा० १-१।

लक्ष्यलक्षणे व्याकरणमिति व्याचक्षाणेन भाष्यकृताऽपि लक्ष्यगतसाधुत्वलक्षकशास्त्रं व्याकरणमिति प्रत्याय्यते, येन च पूर्वोक्तं लक्षणं साधु समर्थ्यते। 'साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः' इत्युक्त्या वाक्यपदीयकृताऽपि उक्तं तल्लक्षणे साधुसम्मतिः प्रकाश्यते।

अथ व्याकरणस्य स्वरूपपरिचायनानन्तरं दर्शनत्वं विमर्शनीयमस्ति। तत्र दृश्यते आत्मतत्त्वं विचार्यते येन तद्दर्शनमिति निर्वचनेन आत्मतत्त्वविचारकशास्त्रत्वं दर्शनलक्षणं पर्यवस्यति। भारतीयदर्शनानामेष स्वभावो यत् सर्वेषां जीवानां कृते कल्याणमार्गं दर्शयेत्, स च मार्गं आत्मतत्त्वविवेचनात्मक एव। तथा च श्रुतिः[1]—'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति। एतदनुगुणम्—'आत्मा वाऽरे द्रष्टव्यः, श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'[2] इति श्रुतिरात्मसाक्षात्कारलक्षणं मोक्षं तदुपायभूयं श्रवणादिकं च प्रतिपादयन्ती साक्षादेव दर्शनपदव्यपदेश्यतां भजते।

एवमेव—'सर्वं खल्विदं ब्रह्म'[3], 'अयमात्मा ब्रह्म'[4] इत्याद्याः श्रुतयो ब्रह्मसूत्राणि च दर्शनपदेन व्यवह्रियन्ते। एतद्विषये व्याकरणं पश्चात्पदं न भवति। यतश्चास्त्रीदमपि आत्मतत्त्वविवेचनम्। उक्तं च—

दृष्ट्वारूपे व्याकरोत् सत्यानृते प्रजापतिः।
अश्रद्धामनृते दधाच्छ्रद्धां सत्ये प्रजापतिः[5]॥ इति।

'प्रजापतिः शब्दोपादानकसृष्टिविधाताः वैयाकरणः संमिलिते सत्यानृते पृथक्कृत्य परमार्थभूते सत्ये वस्तुनि श्रद्धामसत्येऽनात्मनि अश्रद्धां प्रत्यतिष्ठिपत्' इत्यर्थिकयाऽनया श्रुत्या सत्यासत्यविवेचनलक्षणं दर्शनत्वं व्याकरणस्य सुस्पष्टं प्रतिपाद्यते।

किं च प्रकृतिप्रत्ययौ असत्यौ, तदपेक्षया पदानि सत्यानि, ततोऽपि वाक्यानि, पश्यन्त्यादिकं च सर्वं जगदसत्यम्, सर्वापेक्षया पराख्यं वाग्ब्रह्म सत्यमित्येवं निगूढं तात्पर्यम्।

एवमेव—'नामरूपे व्याकरवाणि'[6] इति श्रुतिरपि संश्लिष्टयोः शब्दार्थयोः पृथक्कृतिं बोधयन्ती व्याकरणस्य सत्यासत्यविवेचनलक्षणं दर्शनत्वं प्रकाशयति।

'वाग्वै ब्रह्म'[7], 'वाग्धि ब्रह्म',[8] 'ते मृत्युमतिवर्तन्ते ये वै वाचमुपासते'[9] इत्याद्याः श्रुतयोऽपि वाचो व्याकृतिरूपोपासनया व्याकरणस्य दर्शनत्वं सम्यक् प्रतिपादयन्ति।

एकैव वाग् व्याकृताव्याकृताभेदेन द्विविधाऽस्ति। तत्र व्याकृतापदेन पश्यन्ती-मध्यमा-वैखरीणां ग्रहणम्, अव्याकृतापदेन सर्वधर्मरहिताया नित्यायाः पराख्यवाचो ग्रहणमिति सिद्धान्तोऽस्ति।

किं च विदितमेवास्ति समेषां यत् पुरा सकलन्यायबीजगर्भितः संग्रहनामा लक्षश्लोकात्मको दर्शनग्रन्थो महामुनिव्याडिनिर्मित आसीत्। कियता कालेन नष्टे तस्मिन् संग्रहे व्याकरणस्य विलुप्तप्रायं[10] दर्शनत्वं पुनर्भगवान् पतञ्जलिरुज्जीवयामास महाभाष्यरचनया। पुनस्तच्छिछ्य-

---

१. शुक्लयजुः—३१-१८। २. बृहदा० उ०—२।४।५। ३. छान्दोग्य० उ०—३।४।१।
४. बृहदा० उ०—२।५।१९। ५. शुक्लयजुः—१९।१७।
६. छान्दोग्य० उ०—६।३।२। ७. बृहदा० उ०—४।१।२। ८. ऐ० ब्रा०—२।१५।
९. उद्धृता—शा० भा०—१-३-८ सू० २८। १०. वाक्यपदीयम्—२।४८२-८४, ८६।

परम्परया श्रीमद्भर्तृहरिसम्पादितवाक्यपदीयरचनया च तद्व्याकरणदर्शनं भृशं वर्धितं पोषितं चाभवत् ।

किं बहुना—अस्य दर्शनस्य स्फोटवाद-शब्दाद्वैतवादप्रभृतिसिद्धान्तान् खण्डनमण्डनविषया व्याख्यातवन्तोऽन्येऽपि दार्शनिका दर्शनत्वं सम्मानयन्त्येव ।

एवं व्याकरणस्य दर्शनत्वे निर्णीते सत्यस्य दर्शनस्य काचन भूमिर्निर्देष्टव्या, यत्र चास्य दर्शनस्य प्रतिष्ठा भवेत् । सा चेयं भूमिका षट्स्वध्यायेषु निरूपिताऽस्ति । तत्र च शब्दार्थनिरूपणाध्यायः प्रथमः, शब्दार्थसम्बन्धनिरूपणाध्यायो द्वितीयः, साधननिरूपणाध्यायस्तृतीयः, गुणनिरूपणाध्यायश्चतुर्थः, क्रियानिरूपणाध्यायः पञ्चमः, वृत्तिनिरूपणाध्यायः षष्ठ इत्येवं क्रमिकी स्थितिः षण्णामध्यायानाम् ।

तत्र प्रथमाध्याये व्याकरणस्य स्वरूपवर्णनप्रसङ्गे पश्यन्त्या वाचो वेदरूपत्वं प्रतिपादयता ग्रन्थकारेण व्याकरणं सर्वपदार्थापेक्षया पवित्रमिति सोल्लासं प्रत्यपादि । प्रकृतेर्मातृरूपत्वम्, प्रत्ययस्य च पितृरूपत्वम्, उभयोः सम्भूतिस्थानं पश्यन्ती एव । एतयोरर्थसम्बन्धोऽपि तत्रैवानुस्यूतोऽवतिष्ठते, शब्दार्थसम्बन्धस्य नित्यत्वात् ।

प्रतिमायाः, प्रणवस्य च पश्यन्त्या सहैक्यमपि द्रष्टव्यम् । तदनु, पाणिनेः शिवत्वम्, व्याकरणस्य सर्ववेदपारिषद्यम्, अष्टाध्यायीस्वरूपम्, इन्द्रियविषययोः संस्कारः, बाह्यान्तरभेदेन स्फोटद्वैविध्यम्, शब्दसृष्ट्युत्पत्तिप्रक्रिया चेत्यादयो विषयाः सूक्ष्मेक्षिकया विवेचिताः सन्तिः ।

तत्र शब्दसृष्टिप्रक्रियाप्रस्तावे इत्थं निरुक्तिमस्ति—यथा हि सूक्ष्मं वटबीजं विवृद्धं सदाविर्भूतचैतन्यं वृक्षात्मना दृश्यते; तथैव तत्स्फोटरूपं शब्दब्रह्म स्फुटत्यर्थोऽस्मादिति व्युत्पत्तिविशिष्टं सत् सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूलरूपेण प्रकाशरूपं वैखरीपर्यन्तशब्दराश्यात्मना विमर्शात्मना चार्थकक्षामाश्रित्य सत्त्वरजस्तमोरूपेण बुद्ध्यहङ्कारेन्द्रियादिना सूक्ष्मस्थूलभूतात्मना च परिणमति ।

तत्र सर्वमपि बीजं वर्तुलाकृति-अङ्कुरोत्पत्तिकाले दलद्वयेन विभक्तं भवति, तथैव प्रणवरूपः शब्दोऽपि बिन्दुवर्तुलाकृतिरेव सृष्ट्युन्मुखत्वे विभक्तो भवति ।

पुनश्च ऋक्सामयजुरादिप्रातिशाख्यानुसारेण शैवशाक्ततन्त्रानुसारेण च वर्णोपन्यासः सोपपत्तिकं कृतोऽस्ति । तत्र सर्वेपि विषया आर्षप्रभावप्रभवा इत्यप्युक्तम् ।

तदग्रे च प्रत्यक्षानुमानार्थापत्तिशब्दानुपलब्धयः पञ्च प्रमाणानि, तेषु च शब्दस्य मुख्यं प्रमाणत्वमभ्युपेतम् । स्फोटविभागः कल्पनाप्रसूनः, अष्टानां पदार्थानां स्वरूपं चालोचनीयमस्ति ।

शब्दार्थसम्बन्धनिरूपणाख्ये द्वितीयाध्याये वाच्यवाचकभावकार्यकारणभावरूपसम्बन्धविमर्शः कृतोऽस्ति । तत्र बहुशो वाक्यपदीयं प्रमाणत्वेन निर्दिष्टमस्ति ।

तृतीये गुणनिरूपणाध्याये—'सत्त्वे निविशतेऽपैति' इत्यादिना गुणस्वरूपं सोपपत्तिकं निरूपितम् ।

एतत्प्रसङ्ग एव –

जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा ।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम् ॥

इति याज्ञवल्क्यस्मृतिरपि सम्यग् विवेचिताऽस्ति ।

चतुर्थे साधननिरूपणाध्याये—साधनपदव्यपदेश्यानि कारकाणि निरूपितानि सन्ति । तत्र कृधातोर्निष्पन्नानि कर्तृ-कर्म-करण-अधिकरणपदान्येव स्वार्थभूतं वास्तविकं कारकं बोधयन्ति । एवं च कर्मादीनि चत्वार्य्येव मुख्यानि कारकाणि । सम्प्रदानापादानयोस्तु न मुख्यं कारकत्वम्, अपि तु गौणमेव । एतत्सर्वं तस्मिन्नध्याये द्रष्टव्यमस्ति ।

पञ्चमे क्रियानिरूपणाध्याये धात्वर्थभूता क्रिया, तत्परिच्छेदका भूतभविष्यदादिकालभेदाश्च निरूपिताः सन्ति । स्वातन्त्र्याऽपरपर्याया कालशक्तिः लिङ्गसंख्यादिश्च सोपष्टम्भं निरूपितोऽस्ति ।

षष्ठे वृत्तिनिरूपणाध्याये—कृद्वृत्तिं परित्यज्य चतस्र एव वृत्तयः सिद्धान्तिताः ।

यत्तु श्रीनागेशभट्टेन एकशेषं विहाय चतस्रो वृत्तयो व्याख्याताः, तन्मतं खण्डितमत्र ।

एवं च महता परिश्रमेण प्रतिभातिशयेन च षट्सु अध्यायेषु प्रतिष्ठापितैषा व्याकरणदर्शनभूमिका पञ्चमे विश्वसंस्कृतपरिषन्महोत्सवावसरे सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन प्रकाश्यमाना सती बहुजनहिताय, बहुजनसुखाय च भूयादिति साधुवादवितरणपुरस्सरं विरमति—

श्रीविश्वेश्वरपुर्यां
विजयादशम्याम्
वि० सं० २०३८

श्रीगौरीनाथशास्त्री
कुलपतिः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

# भूमिका

पाणिनीयं व्याकरण शिक्षानिरुक्तज्योतिषप्रभृतिषु षडङ्गेष्वन्यतमं समाम्नायते सूरिभिः। सर्वशास्त्रोपकारकत्वादपि पाणिनीयस्य व्याकरणस्य निर्विचिकित्सं शीर्षण्यताऽभ्युपेयते। एवं सत्यपि सांख्ययोगन्यायवैशेषिकवेदान्तमीमांसेति षडदर्शनातिरिक्तमास्तिकं किमपि सप्तमं दर्शनं सुधीवरैर्नास्थीयत इति विदन्त्येव कोविदा निश्चप्रचम्। व्याकरणातिरिक्तेषु नाम पञ्चस्वपि वेदाङ्गेषु दार्शनिकानि तत्त्वानि नैव समासाद्यन्ते। तेषामन्यतमं व्याकरणमेव तादृशं वेदाङ्गं यत्र खलु द्वेधा प्रवृत्तिर्दृश्यते—१. पदसाधुत्वलक्षणात्मिका २. दर्शनात्मिका चेति। यद्यपि कैश्चित् पाणिनीयैः सूत्रैर्द्वितीया प्रवृत्तिरपि व्याकरणस्याभिलक्ष्यते सूलबणम्, तथापि न्यायमीमांसावेदान्तादिवत् तत्राष्टाध्याय्या न सूत्र्यन्ते दर्शनतत्त्वगुम्फकानि सूत्राणि स्वातन्त्र्येण। व्याडिविभावितो व्याकरणदर्शननिरूपकः संग्रहग्रन्थो नोपलभ्यते साम्प्रतम्। कात्यायनीयेषु वार्त्तिकेष्वपि पदसाधुत्वप्रधानानि कार्याणि निर्दिश्यन्ते। व्याकरणदर्शनप्रतिपादकान्येव तत्त्वानि न प्रस्फुटानि। पातञ्जले महाभाष्ये तु व्याकरणदर्शनतत्त्वानि प्रसङ्गतो व्याख्यातानि, न तु प्राधान्यतः। महाभाष्यमाधारीकृत्य वैयाकरणशिरोमणिना भर्तृहरिणा प्रणीतं वाक्यपदीयम् इत्याख्यं ग्रन्थरत्नं नूनं पदसाधुत्वलक्षणप्रक्रियाविधुरं प्रामुख्यतो व्याकरणदर्शनपक्षं समुद्भासयति। अनेनैकेनैव ग्रन्थेन नूनं व्याकरणदर्शनप्रतीपताशङ्काशङ्कुर्निविशङ्कं शक्यते समुत्खातुम्। यद्यपि माधवाचार्यादिभिर्विपश्चिद्भिः सर्वदर्शनसंग्रहादौ व्याकरणदर्शनस्य कानिचन तत्त्वानि समुल्लिखितवता पाणिनीयदर्शनमप्यन्यतमत्वेन समाश्रुतम्, तथापि तत्र नैव कोऽप्यर्थो यथावन्निरूपितो येन प्रेक्षावतां जिज्ञासूनां लब्धपरम्परोत्कलिका शाम्येत्। वैयाकरणसिद्धान्तमञ्जूषायां लघुमञ्जूषायाञ्च यद्यपि नागेशभट्टेन व्याकरणस्य बहून् दार्शनिकविषयानधिकृत्य माधवाचार्यापेक्षया प्रशस्यतरं व्यधायि पल्लवनम्, तथापि तत्र दर्शनान्तरीयसंस्कारसांकर्येण व्याकरणदर्शनविषयाणां घनान्धकारव्याप्तगुहानिक्षिप्तपदार्थवन्नास्ति प्रभाभास्वरता। वाक्यपदीयं खलु महार्घो बोधमणिर्न सुकरः सर्वेषामिति गवेषणाकोविदैर्व्याकरणजगति तादृशग्रन्थस्यावश्यकत्वमनुभूतं यत्रानुबन्धचतुष्टयादिनिर्देशनपुरस्सरं समनुष्ठिताः स्युर्ब्रह्मजीवजगन्मायादिविचाराः।

श्रीमत्पण्डितरामाज्ञापाण्डेयमेतादृशग्रन्थरचनादिशि प्रैरयद् डॉ० आर्० वेनिस्महोदयः १९१४ तमे खीस्ताब्दे। डॉ० टी० के० लद्दूमहोदयैर्ज्ञानयज्ञपुरोहितैः श्रीपाण्डेयाय विनिर्दिष्टो ग्रन्थसंग्रथनविधिर्नाम। वर्षचतुष्टयं श्रीपाण्डेयेन विषयसम्बद्धोऽनुशीलितोऽन्यूनको ग्रन्थराशिः। धिषणागर्भपरिपुष्ट आभ्यन्तरो ग्रन्थो बहिरागमनाय श्रीपाण्डेयं प्रैरयत् १९१८ तमे खीस्ताब्दे। अनुपलब्धजनेर्वर्षाणां षड्विंशति यावन्मनसि

निधीयमानस्य ग्रन्थरूपतया क्रमशोऽवतरणमुपक्रान्तं १९४७ ख्रीस्ताब्दाद् डॉ० सम्पूर्णानन्दमहोदयानां प्रेरणया। श्रीपाण्डेयेन पुनरसौ व्याकरणविषयको ग्रन्थौघः प्रारम्भि परिशीलितुम्।

पूर्वं ग्रन्थपरिशीलनात् प्रतीकरूपेणाऽऽत्मना संगृहीता सामग्री नारोचत श्रीपाण्डेयमानसाय। त्रयस्त्रिंशद्वर्षोत्तरं दृष्टिः परिपुष्टिमुपेता तदीया। स्वकीया दोषाः प्रतिभासन्ते स्म मुकुरप्रतिबिम्बिता इवेति दोषज्ञतापदवीमसौ समासादयत्। परकीयदोषदर्शनपटिमाऽसाधारणो हि साधारणजनानाम्। स्वकीयदोषसमुद्भावनं नामाऽऽत्मदर्शनम्। श्रीपाण्डेयस्योक्तिस्तत्र स्वदनीया—'तस्मिन्नेव वत्सरे (१९४७ ख्री०) अगस्तमासे मया पुनरप्यपेक्षितविषयाणां परिपुष्ट्यै ग्रन्थास्तद्दृष्ट्या द्रष्टुमारब्धाः। पूर्वं ये विषयाः प्रतीकरूपेण गवेषितास्ते तु साम्प्रतं न रोचन्ते मे। द्वयोराकाशपातालयोरिव तारतम्यदर्शनात्' इति।

इत्थं श्रीपाण्डेयमहाभागेन व्याकरणदर्शनस्य स्वरूप-सम्बन्ध-विषयाधिकारीति चतुष्टयमिह व्याकरणदर्शनभूमिकायां निर्वर्ण्य शब्दब्रह्मजीवजगन्मायादिविचारः प्रवर्तितः। एकैव परा वाणी व्याकृताव्याकृतरूपभेदेन द्वेधा विभज्यते। तत्र पश्यन्त्यादित्रयीं व्याकृतात्मिकां वाणीमाश्रित्य व्याकरणविषयः प्रकृतिप्रत्ययादिविभागः प्रवर्त्तते। पश्यन्ती-प्रतिभा-प्रणवेत्यादयः शब्दाः व्याकरणापरपर्याया एव। प्रकृतिपदेन माता, प्रत्ययपदेन च पिता गृह्यते। तत्र नामरूपात्मकौ शब्दार्थौ शक्तिशक्तिमन्तौ जडचेतनात्मकौ बोध्यौ। सच्चिदानन्दस्वरूपा परा वाग् विद्योतते—'स्वरूपज्योतिरेवान्तः परा वागनपायनी' इति। पश्यन्त्या एव रूपद्वयं चकास्ति—प्रकृतिरूपमुपादानकारणमेकम्, अपरं च प्रत्ययरूपं निमित्तकारणमिति। इदं च परम्पराद्वयं पश्यन्तीमेव कामधेनुमाश्रित्य समुपक्रान्तम्। कालाख्या स्वातन्त्र्यशक्तिस्तत्रैव विराजते। अविद्यादयः शक्तयोऽपि तद्विजृम्भितम्। सैव पश्यन्तीरूपेण सर्वशब्दबीजा, प्रतिभारूपेण च सकलार्थप्रसवेत्यभ्युपगन्तव्यम्। एतत्प्रकाशेनैवान्ये प्रकाशाः प्रकाशन्तेऽग्निसूर्यादयः। एवं च पश्यन्तीरूपव्याकरणज्ञानमन्तरा पराख्यब्रह्माधिगतिः कल्पकोटिशतैरन्यैरुपायैर्दुर्लभैवेति सुगमोऽयं पन्थाः समवलम्ब्यतां वास्तविकीं मुक्तिमभीप्सुभिस्तत्त्वज्ञानकुशलैर्विद्वत्प्रवरैरिति धिया श्रीपाण्डेयेन व्याकरणदर्शनस्य भूमिका प्रस्ताविता।

यथा कश्चिदनुसन्धाता स्वकीयस्यानुसन्धानस्य संक्षिप्तं विवरणं (synopsis) पूर्वं प्रस्तौति, तदाधृत्य च निबध्नाति गवेषणाग्रन्थम्, तथैव श्रीपाण्डेयमहोदयः स्वकीयामनर्घ्यां गवेषणां व्याकरणदर्शनभूमिका, व्याकरणदर्शनपीठिका, व्याकरणदर्शनप्रतिभा चेति व्यभाजयत् त्रिषु भागेषु वर्ण्यविषयविभाजनानुसारेण।

विभागत्रयात्मकस्य ग्रन्थस्य संग्रथनोत्तरमेव प्रथमतोऽयं भागो मुद्रणार्थं प्रेषितो मुद्रणालयमिति विज्ञायतेऽस्यां व्याकरणदर्शनभूमिकायां द्वयोः पीठिकाप्रतिभयोः संक्षिप्तस्यार्थस्य यथास्थानमुपन्यासेन। एकत्र स व्याहरति—'अयं विषयः—(द्रव्यपद-

वाच्यतारूपः) प्रतिमायां प्रकटयिष्यते' इति, 'विस्तरस्तु प्रतिमायां द्रष्टव्यः' इति। 'एतत् सर्वं पीठिकायां विस्तरेण विवेचयिष्यते' इति। पाणिनीयव्याकरणदर्शनस्य मूलभूतम्—१. सर्ववेदपारिषदं पाणिनीयं व्याकरणम्, २. प्रातिशाख्यानि, ३. शिक्षापद्धतयः, ४. निरुक्तम् इति वाङ्मयं चकास्ति। श्रीपाण्डेयमहोदयेन वाङ्मयमिदमविकलं निर्मथ्य व्याकरणदर्शनभूमिकादयस्त्रयोऽपि भागाः प्रणीताः सन्ति।

स्फोटभेदनिरूपणान्ते सृष्टिक्रमो निरूपितो व्याकरणदर्शनभूमिकायामस्याम्। यद्यपि पाणिनीयेषु सूत्रेषु, कात्यायनीयेषु वार्त्तिकेषु पातञ्जले च महाभाष्ये सृष्टिक्रमो न विवेचितः, तथापि श्रीपाण्डेयेन पाणिनीयव्याकरणसिद्धान्तानवलम्ब्य श्रुतिप्रामाण्यान्निरुक्तसन्दर्भाच्च प्रयत्नोऽयं समनुष्ठितः। निरुक्तमाश्रित्य परिणामवाद आस्थितो न तु विवर्त्तवादः। स्फोटाख्यं शब्दब्रह्म प्रकाशरूपं वैखरीपर्यन्तशब्दराश्यात्मना विमर्शात्मना चार्थश्रेणिमवलम्बमानं सत्त्वरजस्तमोरूपेण बुद्ध्यहङ्कारेन्द्रियादिना सूक्ष्मस्थूलभूतात्मना परिणमते। सृष्टिप्रकरणे यद्यपीन्द्रियाणामपि सृष्टिर्भाष्यादपि प्रतीयते, तथापि तस्या व्याकरणविषयाभावान्नेह ग्रन्थे समुपन्यासः। ज्ञानस्य शब्दरूपेण परिणामो व्याहृतः।

एवं तावच्छब्दसृष्टिप्रक्रियामभिधाय वैखरीरूपः सूक्ष्मः शब्दो व्याकरणेनानुशिष्यते। तत्र स्वरव्यञ्जनसम्भूतिम्, वर्णोच्चारणप्रक्रियां चोक्त्वा 'वायोरणूनां ज्ञानस्य' इति वाक्यपदीयोक्तो दर्शनभेदो विवेचितः। ततो वर्णानां स्थानप्रयत्नविवेको विस्तरेण विभावितः प्रातिशाख्यशिक्षाग्रन्थानामाधारेण। सर्वेषां प्रातिशाख्यानां शिक्षाग्रन्थानां चाधारेण वर्णानां स्थितिरुपवर्णिता। पाणिनीयव्याकरणानुसारेण च विवेचनं कृतम्। तत्र ग्रन्थेषु वर्णानां साङ्गोपाङ्गं यादृशं वर्णनं लभ्यते, न तादृशमन्यत्र। श्रीपाण्डेयेन वैष्णवशैवशाक्ततन्त्रग्रन्थान् पर्यालोड्य वर्णोपन्यासपूर्वकं तत्रत्यः सृष्टिक्रमो दर्शितः। ततो निरुक्तानुसारेण शब्दार्थसृष्टिक्रमो निरूपितः। पर्यन्ते तन्त्रोक्तसृष्टिक्रमो व्याकरणप्रमाणमङ्गीकृत्य पर्यालोचितः।

कस्मिंश्चिदपि दर्शने प्रत्यक्षानुमानोपमानशब्दोपलब्ध्यादिषु प्रमाणेषु कानिचिदवश्यमास्थीयन्ते। व्याकरणं दर्शनं चेत् कति प्रमाणानि तेन समाश्रीयन्ते? व्याकरणशास्त्रे नैतादृशः कश्चन स्वतन्त्रो ग्रन्थो विद्यते (व्याकरणदर्शने 'प्रमाणमीमांसा' इति ग्रन्थोऽस्मादेव विश्वविद्यालयात् प्रकाशमुपेतः कतिभ्यश्चिद् वर्षेभ्यः प्राक्) नापि वैयाकरणग्रन्थेष्वेतादृशं किमपि प्रकरणं विवेचनं वेति कथमस्य दर्शनत्वं प्रतिष्ठाप्यत इति पर्यालोचनायामिह श्रीपाण्डेयेन व्याकरणाभिमतानि प्रमाणानि समीक्षितानि। बन्धमोक्षस्वरूपतामभिधाय स्फोटतत्त्वं सङ्कीर्त्तितम्।

परतो द्रव्य-सम्बन्ध-गुण-साधन-शक्ति-क्रिया-काल-उपग्रह-लिङ्गवृत्तिप्रभृतीनि व्याकरणदर्शनतत्त्वानि मुख्यतो वाक्यपदीयमाश्रित्य साधीयो विवेचितान्यस्मिन् व्याकरणदर्शनभूमिकाभागे। प्रयासोऽयमादिमो व्याकरणदर्शनप्रतिष्ठापनादिशि वरेण्यः

श्रीपाण्डेयमहाभागस्य । इतः प्राप्तप्रेरणा अनेके सुधीप्रवराः स्वतन्त्रान् ग्रन्थान् निबन्द्धुं प्रवृत्ता अभूवन्नित्युपपद्यते स्फारसभाजनभाजनताऽस्य ग्रन्थमणेः ।

१९५४ तमे ख्रीस्ताब्दे सरस्वतीभवनाध्ययनमालाया एकादशपुष्पतया विकचितस्यास्य गुणगणगरीयस्त्वादल्पीयस्येवानेहसि समजनि मुद्रणातीतत्वम् । गुणलुब्धानां जिज्ञासूनां सुधियां चासकृत् पुनर्मुद्रणाऽऽग्रहं निध्याय विश्वविद्यालयेनास्य पुनः प्रकाशनमङ्गीकृतं सामोदं प्राच्यपाश्चात्योभयविद्याजुषां दार्शनिकप्रवराणां **श्रीगौरीनाथशास्त्रिभट्टाचार्यमहोदयानां** सम्पादनविधौ । साद्यस्कं सम्पादनविधिमनुरुध्य विविधपरिशिष्टविशिष्टं संस्करणमिदं लब्धवर्णानां प्रीणनेन जिज्ञासूनां चोपकारेण नूनं तदीयानि समावर्जयिष्यति चेतांसीति मे द्रढीयान् प्रत्ययः ।

**विश्वविद्यालयाऽनुदानाऽऽयोगस्य** वैत्तिकेन साहायकेन ग्रन्थोऽयं मुद्रित इति तत्रत्येभ्योऽधिकारिभ्यो धन्यवादान् वितरन् विरमति

वाराणस्याम्
श्रीरामनवम्यां २०३९ वै०
(२-४-८२ ख्री० भृगौ)

**भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**
निदेशकः,
अनुसन्धानसंस्थानस्य

## EDITOR'S NOTE

In response to our University's request for financial assistance for reprinting a number of our publications which have gone out of print and for which a demand from the scholars is being felt, the University Grants Commission was pleased to sanction some money for the reprinting of three volumes only, among which the two works by Pandit Rāmājñā Pāṇḍeya were included. We have now a great pleasure in reprinting one of his works, namely, Vyākaraṇa-Darśana-Bhūmikā. The forewords to the first edition by Prof. K. A. Subrahmanya Iyer, the preliminary remarks by Pandit Sabhapati Sharma Upadhyaya and the author's own introduction are being included in this edition.

It was in 1914 that Dr. Arther Vanice the then Principal, Benares Sanskrit college and Mr. T. K. Laddu brought Pandit Rāmājñā Pāṇḍeya for doing research in Sanskrit Grammar. About three decades after it was at the suggestion of Dr. Sampurnanand that Panditji started writing his introduction to the Philosophy of Grammar.

Born at the village Ratasaṛa in the district Ballia in Uttar Pradesh, Pandit Rāmājñā Pāṇḍeya taught Sanskrit at Patna Sanskrit College and for a time he was a teacher at Puri. He was initiated in the sect of Rāmānujācārya. Pandit Rāmājñā Pāṇḍeya studied Paninian Grammar at Varanasi. Among his teachers may be mentioned Pandit Devanārāyaṇa Tripāṭhī a renowned scholar in Sanskrit Grammar of his time. It was in 1947 that he was appointed by the Government of Uttar Pradesh to undertake research at the Sarasvatī-Bhavana Library.

The Paninian system of Grammar has been privileged to be ranked amongst the different systems of Indian Philosophy. It is said that monism flowed in the three streams of Śabda-Monism, Brahma-Monism and Vijñāna-Monism. It is indeed quite interesting to note that Śabda-Monism in Indian thought has found a most eloquent elaboration in the Brahma-Kāṇḍa of Bhartṛhari and the Sphoṭasiddhi of Maṇḍana Miśra. The importance of this branch of philosophy is established when it is found that almost all the reputed Ācāryas of different systems of Indian Philosophy took special care to mention it and to criticise it and finally to reject it.

We are privileged to-day to present this work from the pen of a reputed scholar before the academic world. And in this connection we acknowledge with gratitude the liberal grants sanctioned by the University Grants Commission for its publication.

**Gaurinath Sastri**

## FOREWORD TO THE FIRST EDITION

I have heen asked to write a few words about the व्याकरणदर्शनभूमिका of Pandit Rāmājñā Pāṇḍeya, U. P. Government Research Scholar, working in the Sarasvatī-Bhavana, Government Sanskrit College, Banaras. I do so with pleasure. It is an attempt to bring together the ideas, partly philosophical and partly linguistic, found scattered in Vaiyākaraṇa literature. That Vyākaraṇa was looked upon as a Darśana is made clear by the fact that one of the chapters of the Sarvadarśanasaṅgraha is entitled : पाणिनिदर्शनम्. That chapter is all too brief. It is based on ancient works such as the Vākyapadīya of Bhartṛhari. The ultimate source of all these ideas is, of course, the Aṣṭādhyāyī of Pāṇini as interpreted by Kātyāyana and Patañjali.

The present work called भूमिका is only the first part of the work. Two more parts, the पीठिका and the प्रतिमा are promised. The भूमिका gives in summary form the contents of the other two parts. It is based, not only on the ultimate source mentioned above, but also on later works such as the Vākyapadīya of Bhartṛhari and the commentaries thereon, the Pradīpa of Kaiyaṭa, the Laghumañjūṣā and the Uddyota of Nāgoji Bhaṭṭa. The author has also made extensive use of the phonetic material found in the Śikṣā works and the Prātiśākhyas, especially the Taittirīyaprātiśākhya, with its two commentaries, the Tribhāṣyaratna and the Vaidikābharaṇa. This is a novel feature of the work as compared with the Laghumañjūṣā of the Vaiyākaraṇabhūṣaṇa of Kauṇḍabhaṭṭa. A certain amount of material has been taken from the Tantras also, especially on the phonetic and mystic aspects of the varṇamālā.

The work deals with a wide range of topics : the nature and scope of Vyākaraṇa, Sphoṭa and its varieties, the number

of sounds in the Sanskrit language, their mode of articulation, their variation according to अनुप्रदान, संसर्ग, स्थान, करण and परिमाण, the different pramāṇas, the Vaiyākaraṇa conception of मोक्ष, जाति, द्रव्य, गुण, दिक्, क्रिया, काल, लिङ्ग and वृत्ति। Incidentally there are discussions on such topics as the वीचीतरङ्गन्याय and the कदम्बगोलकन्याय.

One noteworthy feature of the work is the way in which the author unhesitatingly rejects the views of even such writers as Helārāja and Nāgeśa. Against Helārāja, he holds that Vaiyākaraṇas accept the परिणामवाद and not the विवर्तवाद. He considers the view of Nāgeśa on वर्णस्फोट as going against the Bhāṣya and rejects Nāgeśa's statement: अणुः शब्द इत्यार्हता मन्यन्ते on the ground that the view in question is held really by Grammarians.

The work is written in very simple Sanskrit. The author states his views and his disagreements from others in a forthright manner. Pandits may miss the तर्क element in the exposition of the ideas but, as a compensation, the work may appeal to a wider circle of readers. The phonetic material taken from different sources requires a comparative and critical study on the basis of tradition. It is a pity that the author does not seem to be familiar with the work on Sanskrit phonetics going on in western countries. The recently published (1953) "Phonetics in Ancient India" by W. S. Allen deals with many matters discussed in this work but with an entirely different approach.

This is only the first part of the work. It is to be hoped that the U. P. Government will enable Pt. Rāmājñā Pāṇḍeya to continue the work and finish it.

K. A. SUBRAHMANYA IYER
*Lucknow University.*

# वक्तव्यम्

## ( प्रथमसंस्करणस्य )

प्रायो वहुस्थलावच्छेदेन व्याकरणदर्शनभूमिकेयं मया समवेक्षि ।

यादृशो व्याकरणागमांशोऽनेन ग्रन्थकर्त्राऽप्रतिमप्रतिभाशालिनां पुरस्ता-दुपस्थाप्यते, स प्राचीनतमोऽपि नव्यभव्यतां न परिजहाति । तदुक्तं हरिणा—

य: पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागम: ।
स एव दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थित: ॥
पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभि: ।
स नीतो वहुशाखत्वं चन्द्राचार्य्यादिभि: पुन: ॥ इति ।

अभिवाक्यपदीयकाराभिहितिभिर्नितरां निगूढं व्याकरणागमरहस्यं हरेरर्वा-ग्भाविभिर्बुधैर्न यथावत्पाठ्यपाठनपरम्परामानीतमत उच्छिन्नमिव जातम् ।

तत्र भगवता पतञ्जलिनाऽपि "चत्वारि वाक्परिमिता पदानि" इत्यस्य व्याख्यायाम—'चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्चेत्येवं व्याचक्षाणे-नागमरहस्यस्य गोपितत्वमेव द्योतितम्' इति ।

"संग्रहे प्राधान्येन प्रदर्शितं नित्यो वा स्यात् कार्य्यो वेति भाष्येण शब्दप्रकृति-रपभ्रंश इति संग्रहकार:" इति हेलाराजोक्त्या च तदानीमुपलभ्यमानाऽपि संग्रहो नैव सुलभप्रचार आसीत् । अल्पविद्यापरिग्रहान् प्रक्रियामात्राध्ययनशीलान् वैयाकरणा-नवाप्य परिभ्रष्टो व्याकरणागम: ।

तमेव व्याकरणागममुद्दिधीर्षुरनिर्वचनीयप्रतिभाभास्वरो रामाज्ञापाण्डेयश्चिरात् प्रयतमान आसीत् ।

निगमादपि प्राचीनमागमं सुस्थयन्, आगमे षोडशैव मातृका आसन्, तत एव च स्वराणामुद्भव:, अनुनासिकोच्चारणे ऐकारौकारोच्चारणे च त्रुटिं प्रातिशाख्यप्रमाणैर्द्रढयन् मुख्यानि चत्वार्य्येव कारकाणि इति च व्यवस्थापयन्, स्वासाधारणगवेषणापद्धत्येतरानाधुनिकानन्वेषकानधरयन् नवनवोन्मेषपथपथिकानाश्चर्य्यकरान् पदार्थानुद्भावयन्नयं पाण्डेयमहोदयोऽवश्यमेवोत्साहप्रदानास्पदतामर्हति ।

जगदीश्वरं प्रार्थये च शतादप्यधिकं स्वस्थोऽचिन्तचित्तो जीवन्नेवमेवानन्य-साधारणं कार्य्यं कुर्वाण: परमरमणीयां कीर्त्तिकल्पलतिकां लभेतेति ।

**सभापतिशर्मोपाध्याय:**
एम्. एल्. सी.
प्रिन्सिपल, वि० सं० कालेज, काशी ।

# प्राक्कथनम्

## ( प्रथमसंस्करणस्य )

सम्बन्ध-व्यक्ति-जातित्रयविमलपदश्चारुबाह्यान्तराभ्यां
स्फोटाभ्यां शीर्षकाभ्यां विहितनिजतनुर्दिक्क्रियासाधनाख्यैः ॥
शृङ्गैः कालात्मरूपैः पुरुषगुणगणैर्वृत्तिलिङ्गैः ससंख्यै-
र्द्रव्यैः सोपग्रहैर्यो जयतु निजकरैः सप्तभिः शब्दमूर्त्तिः ॥ १ ॥

परं परां प्रणम्याहं पितरौ मातृकागुरून् ।
भूमिकालखनात् पूर्वं किञ्चिदत्र निवेदये ॥ २ ।

भूमिकायां मया संक्षेपेण किञ्चित् प्रकाशयिष्यते । सम्प्रति यत् किञ्चिदहं वच्मि, तत्र न मेऽभिमानो मन्तव्यः, केवलं स्वान्ते महान्तं क्षोभमनुभवन् सर्वानास्तिकानुद्दिश्य साञ्जलिबन्धं प्रार्थये । भो भोः सज्जनाः ? बहोः कालादधुना भावत्कं भारतं स्वातन्त्र्यं प्राप्य बाल इव यौवनावापनेऽहर्निशं चेष्टते । वयमपि चेतनाश्चैतन्यस्यैव प्राधान्यमाशासु सडिण्डिममुद्घोषयन्तो बहुविधसम्प्रदायनिगडिता अपि रात्रिन्दिवं नूतनातिनूतनसम्प्रदायनिर्माणे बद्धपरिकरा वर्तामहे ।

अपरे च जडवादिनो वैदेशिका नव्यभव्यव्योमयानादिनिर्माणेन जनानुपकुर्वन्तः सततं प्रयतन्ते । दृष्टिं निक्षिपन्तु भवन्तोऽस्माकं पूर्वजानां स्पष्टासु सूक्तिषु, यथोक्तं भगवता यास्केन निरुक्ते, वाक्यपदीयटीकायां हेलाराजद्विजन्मना च । किं वर्तते तादृशं साहसमाधुनिकेषु विप्रप्रवरेषु अन्येषु वा केषुचिद् विद्वत्सु । ये हि स्वयं गर्ते पततोऽन्यानपि च पातयतो मनुजान् सन्मार्गं प्रदर्श्य समुद्धरेयुः । न दृश्यन्तेऽद्यत्वे भगवता पतञ्जलिना परिभाषिताः शिष्टाः, नापि च तादृशाः शिष्याः किञ्चिदालोचयन्तु भवन्तः । अस्य शिष्यशब्दस्य प्रयोगः कं भावमवलम्ब्य अध्याप्येषु जनेषु कृतोऽस्माकं पौर्वकालिकैर्बुधैः । तथा हि शिष्यस्य शासकेन अध्याप्यस्य अध्यापकेन शिक्ष्यस्य शिक्षकेण गुरोस्तु छात्रेण सह सम्बन्धो जागर्ति ।

तत्र शिष्यशब्दो भाष्ये स्थानिवत्सूत्रे उपाध्यायेन ( महा. अ. १ पा. १ सू. ५६ ) आकडारसूत्रे ( पा० १।४।१ ) आचार्येण 'छत्रादिभ्यो णः' ( पा० ४।४।६२) इति सूत्रे गुरुणा 'मघवा बहुलम्' ( पा० ६।४।१२८ ) इति सूत्रे शासनीयेऽर्थे प्रयुक्तोऽस्ति ।

शिक्षणीये पुरुषे शिक्ष्यशब्दप्रयोगमकृत्वा शिष्यशब्दं प्रयुञ्जानस्य जनस्य गूढोऽभिप्रायोऽवगन्तव्यः ।

तथाहि शिक्षकेणाध्याप्यः पुरुषो यदाध्यापितो भवति, तदा स शिक्षित इत्युच्यते । परं यदि शिष्यः शिष्यते स्म, तदा स शिष्ट इति कथ्यते । एतदर्थम् 'विद्या ह

वै ब्राह्मगमाजगाम' इत्याद्यागमोक्तिं संस्मृत्य तादृशं शासनीयं "शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्" इति गीतोक्तानुसारम् अर्जुनमिव प्रपन्नं जनं शिष्टं विधातुं शिष्यशब्दः प्रयोगपदवीमानीतोऽभूत् ।

एवं सति शिल्पिभिः प्रस्तरादिनिर्मितायां प्राणप्रतिष्ठादिसंस्कारैः संस्कृतायां प्रतिमायां भगवत्तादात्म्यभावनया भगवदभेदेन सम्यगर्चितायां यद्यैहिकामुष्मिकफलानि लब्धुं शक्यन्ते तर्हि भगवन्निर्मितायां भगवतैव प्राणैर्योजितायां गुरुरूपायां व्यक्तौ शिष्यो यदि भगवद्बुद्ध्याऽभिगमपादोपस्पर्शनादिभिः समर्चयेत् तर्हि अवश्यमेव "ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्" इति भगवद्वाक्यस्य सङ्गतिः स्यात् ।

अन्यच्च 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इत्यादि गीतोक्तवाक्यसूचितं भक्तत्वं तस्मिन् प्रकाशेत । तत्समकालमेव "त्वदाश्रितानां जगदुद्भवस्थितिप्रणाशसंसार-विमोचनादयः" इति स्तोत्ररत्नोक्तपद्यानुसारं भगवता भक्ते भगवत्तादात्म्यापन्ने पुरुषे ब्रह्मविष्णुरुद्रनिभे तादृश्यः शक्तयोऽवश्यमेव दृग्गोचरीभूता भवेयुरित्यत्र नास्ति किञ्चिच्चित्रम् । स च भक्तः स्वेच्छया ब्रह्माद्यन्यतमभावेन व्यवहरेत् सर्वभावेन वेति स एव निश्चेष्यति । अतः सर्वेऽप्यास्तिकास्तादृशं प्रयत्नं विदधतां येन रूसामेरिकाप्रभृतिभी राष्ट्रैः संसारमसमये समुच्छेत्तुं प्रयत्नो मा कारीति ।

इह प्रकृतविषये किञ्चिदुच्यते—

अयं हि दर्शनीयो विषयो द्वादशोत्तरैकोनविंशतिशततमात् ख्रीस्ताब्दादनुक्षणं समालोचनापथं प्रापितो ग्रन्थरूपं लब्धुं व्यग्रोऽभवत् । तदा कीदृशमाकारमस्मै दद्या-मिति चिन्तयन् निरचिनवम् । 'अवश्यमेव दर्शनीयः पुरुषः पीठिकायामेव संस्थाप्यः, पीठिका च काञ्चिद् भूमिकामपेक्षते इति कृत्वैव प्रथमं मया भूमिकेयं विनिर्मिता । तस्यां च स्वनविज्ञानरूपा पीठिका प्रतितिष्ठतु । तस्यां षोडशभिरङ्गै रञ्जितो भूमिका-पीठिका-प्रतिमारूपेण बद्धो दर्शनात्मा पुरुषः सततमनुसन्धेयः । अग्रे प्रकाशं प्रापयिष्य-माणायां पीठिकायां षोडशदलानि एका च कर्णिकेति सप्तदश प्रकरणानि भवेयुः, या च ग्रन्थरूपं प्राप्ता प्रकाशनाय त्वरते । प्रतिमाऽपि भूमिकायां संक्षेपं रूपमाप्ता विस्तररूपेण समक्षमागन्तुं कञ्चन समयमपेक्षते ।

भो भोः सहृदया दीयतां दयादृष्टिर्मयि भगवति प्रपत्तुं व्यग्रे मानवे । नाहमित-स्ततो विप्रकीर्णान् विषयान् संक्षिप्य प्रतिमायां सन्निवेशयितुं वाञ्छामि; किन्तु काले काले भगवतैव विशुद्धायां मदीयायां बुद्धौ निवेशितान् पदार्थान् संकलय्य शिक्षानिरुक्त-प्रातिशाख्येत्यङ्गत्रयविशिष्टं व्याकरणरूपमङ्गिनं परिष्कृत्य निगमागमाद्यर्थानुकूलं सत्यवसरे स्थापयिष्ये । प्रार्थये च भगवन्तं यदयं मम सुहृत् पार्थसारथिर्गृहश्रमादिमन्त्री शिक्षैकसागरपारदृश्वा योगं युञ्जानः श्रीसम्पूर्णानन्दो नीरोगः सौभाग्यसम्पन्नश्चिरं जीव्यात्, यस्योद्योगेन चिरात् समीहितोऽर्थस्त्वरितं सिद्धिं प्रापितो भविष्यति ।

अहमपि स्वीयेऽस्मिञ्जन्मनि बहुभिर्मदीयैर्मित्रैर्बहुविधग्रन्थनिर्माणार्थमुद्योजितोऽपि पर्याप्तद्रव्यलाभलोभं दर्शितोऽपि नहि तादृशान् ग्रन्थान् निर्मातुं प्रवृत्तोऽभवम्। वर्तते च तादृशसाधारणजनोपकारकग्रन्थनिर्माणेऽभिप्रायः। स चैतद्ग्रन्थनिर्माणानन्तरं सफलो भूयादिति भगवन्तमभ्यर्थये।

एतद् ग्रन्थस्वरूपमाविष्कर्तुं नियोक्तार स्वर्गामिणं डाक्टर ए० बेनिस्महोदयम, तथा डाक्टर टी० के० लद्दूमहाभागं च सततं पूज्यबुद्ध्या संस्मरामि।

अधुनाऽस्मिन् भारते प्रगाढपाण्डित्यैकाधारं प्राच्यप्रतीच्यदर्शनाचार्यं म० म० श्रीगोपीनाथकविराजमहाभागं डी० लिट्० इत्यादिपदवीयोग्यांश्च छात्रान् विदधतम् एतद्ग्रन्थनिर्माणेऽन्तरान्तरा ग्रन्थनीयान् विषयान् निर्दिशन्तं श्रीमन्तं पण्डितराजं विधानपरिषदो मुख्यं सभ्यं गुरुकल्पं श्रीसभापत्युपाध्यायं च स्तुतिकुसुमाञ्जलिभिः समर्चामि।

अभिवादये च स्वर्गगामिणोऽस्माकमाद्यान् गुरून् व्याकरणैकप्राणभूतान् देवनारायणत्रिपाठिनः (तिवारीजीतिनाम्ना प्रसिद्धान्) गोनर्दीयावतारान् वैयाकरणकेसरिणस्तपसार्जितार्षशक्तीन्, द्वितीयान् गुरून् म० म० भारद्वाजदामोदरशास्त्रिणः, तृतीयान् गुरून् सकलदर्शनपारावारीणान् साहित्यार्णवकर्णधारान् 'सी० आई० ई०' इत्यादिपदवीविभूषितान् मानवल्लीगङ्गाधरशास्त्रिणः।

भारतमार्तण्डान् अत्रैव विद्यारस इत्यादिपदवीविभूषितान् साक्षात् शिवावतारान् गवेषणाशक्तिविशिष्टान् मदीयगवेषणाश्रवणमात्रेण प्रचलत्तुन्दान् आस्तिकनास्तिकसकलदर्शनप्राणभूतान् म० म० शिवकुमारमिश्रांश्चाभिवादये।

येषु येषु ग० सं० कालेजाध्यक्षेषु सत्सु मदीयं गवेषणाकार्यं प्रचलितमासीत्, तेषु अन्यतमं डा० मङ्गलदेवशास्त्रिणम्, मन्मित्रं म० म० खिस्तेश्रीनारायणशास्त्रिणम्, मदीयव्याकरणदर्शनभूमिकायाः साकल्येन द्रष्टारं को० अ० ऐय्यरमहाभागं सम्प्रति काशिकराजकीयसंस्कृतमहाविद्यालयाध्यक्षं व्याकरणाचार्यम् एम्० ए० प० त्रिभुवनोपाध्यायं च धन्यवादशतैरभ्यर्चये।

का० रा० सं० महाविद्यालयप्रधानाध्यापकं प० श्रीबदरीनाथशुक्लम्, काशिकराजकीयसंस्कृतमहाविद्यालये व्याकरणाध्यापकम् अध्यापने लब्धयशसं पञ्चोलिश्रीबालकृष्णम्, वेदविद्याप्रवीणं पुराणादिशास्त्राध्यापकमनन्तशास्त्रिफड़केमहोदयम्, सारस्वतीसुषमासम्पादकं दर्शनाचार्यव्रजवल्लभद्विवेदं च धन्यवादशतैर्भूषये। एम्० ए० कल्पो व्याकरणाचार्यो विरलास० महाविद्यालयाध्यापकरामावधपाण्डेयः शुभकामनाभिः परिवर्ध्यते। एतैर्महोदयैर्ग्रन्थमुद्रणे बहुविधं साहाय्यं दत्तमिति पार्थसारथिः श्रीकृष्ण एतेषां मनोरथं पूर्यादिति प्रार्थये।

विदुषामाश्रवः
**रामाज्ञापाण्डेयः**

# विषयानुक्रमणी

| विषयः | पृष्ठम् |
|---|---|

| विषयः | पृष्ठम् |
|---|---|

# संक्षेपविवरणम्

## (Abbreviations)

| | |
|---|---|
| अ०प्रा०= | अथर्वप्रातिशाख्यम् |
| अष्टा०= | अष्टाध्यायी |
| अहि०सं०= | अहिर्बुध्न्यसंहिता |
| आपि०शि०= | आपिशलिशिक्षा |
| ऋ०प्रा०= | ऋक्प्रातिशाख्यम् |
| का०व्या०= | कातन्त्रव्याकरणम् |
| ता०उ०= | तापनीयोपनिषद् |
| तै०प्रा०= | तैत्तिरीयप्रातिशाख्यम् |
| निरु०= | निरुक्तम् |
| न्या०द०= | न्यायदर्शनम् |
| प०म०= | पदमञ्जरी |
| प०त्रिं०= | परात्रिंशिका |
| पा०शि०= | पाणिनीयशिक्षा |
| प्र०कौ०= | प्रक्रियाकौमुदी |
| प्राति०= | प्रातिशाख्यम् |
| बृ०उ०= | बृहदारण्कोपनिषद् |
| भू०सा०= | भूषणसारः |
| महा०= | महाभारतम् |
| महाभा०= | महाभाष्यम् |
| मा०पु०= | मार्कण्डेयपुराणम् |
| य०प्रा०= | यजुःप्रातिशाख्यम् |
| या०शि०= | याज्ञवल्क्यशिक्षा |
| यो०भा०= | योगभाष्यम् |
| यो०वा०= | योगवाचस्पत्यम् |

| | |
|---|---|
| यो०सू०= | योगसूत्रम् |
| ल०म०= | लघुमञ्जूषा |
| ल०शे०= | लघुशब्देन्दुशेखरः |
| वा०प०= | वाक्यपदीयम् |
| वै०भ०= | वैदिकाभरणम् |
| श्रीमद्भा०= | श्रीमद्भागवतम् |
| स०सं०= | सर्वदर्शनसंग्रहः |
| सां०का०= | सांख्यकारिका |
| सि०कौ०= | सिद्धान्तकौमुदी |

❀ ❀ ❀

रामाज्ञापाण्डेयविरचिता

# व्याकरणदर्शनभूमिका*

अस्मद्देशिकमस्मदीयपरमाचार्यानशेषान् गुरून्
श्रीमल्लक्ष्मणयोगिपुङ्गवमहापूर्णौ मुनिं यामुनम् ।
रामं पद्मविलोचनं मुनिवरं नाथं शठद्वेषिणं
सेनेशं श्रियमिन्दिरासहचरं नारायणं संश्रये ॥ १ ।
बुद्धिं योऽष्टगुणां ददाति सदयं भक्ताय सक्तात्मने
तत्प्राप्त्या चिदचिद्विभागमहितं विश्वं समुद्भासते ।
योऽन्तःस्थो बहिरेत्य योगकलया तत्त्वान्तरङ्गत्रयं
दत्त्वा पूतमनस्कतां वितनुतां नारायणः सोऽचिरात् ॥ २ ।

---

* अत्र हि व्याकरणदर्शनमित्यस्य कोऽर्थः ? एवं प्रश्ने तद्घटकदर्शनशब्दस्यार्थः प्रथमं निर्णीयते । अयं हि दर्शनशब्दो भावसाधनः करणसाधनश्च । तत्र भावसाधनत्वे दृष्टिरित्यर्थस्तस्यावबुध्यते । करणसाधनत्वे तु दृश्यते प्रत्यक्षीक्रियते न तु अनुमीयते नापि शब्दजन्यबोधविषयीक्रियते अनेनेति व्युत्पत्त्या दर्शनसाधनमित्यर्थः । एवं सति यैर्यैरुपायैर्दृश्यते, ते सर्वेऽपि उपाया दर्शनपदव्यपदिष्टा भवितुमर्हन्ति । भावसाधनत्वे तु—"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः । मत्वा च सततं ध्येय एते दर्शनहेतवः ॥" (सांख्यप्र० भा० प्र० अ० १ सू० १) इत्युक्त्या श्रुतिवाक्यश्रवणमन्तरा यत् किञ्चिद् ग्रथ्यमानं वस्तु दर्शनमेव नहि भवितुमर्हतीति कथङ्कारं दर्शनपदव्यपदिष्टानां दर्शनपदव्यवहार्यता इति चेत्, उच्यते, सर्वेषामपि दर्शनानामुद्भावकानां चेतसि सैव भगवती श्रुतिः साक्षात् परम्परया वा स्वकीयं कार्यं विदधती वर्तत एव । तामन्तरा तस्याश्चितः प्रकाशस्य खपुष्पायमाणत्वात् । एवं च दर्शनहेतूनां दर्शकं प्रतिपादकं वा शास्त्रं लक्षणया दर्शनपदभाग् भवेदेव किमुत करणसाधनत्वे । तथा च व्याकरणमेव दर्शनमिति कर्मधारये सर्वं व्याकरणं दर्शनमेव भविष्यति । भावसाधनत्वे षष्ठीसमासे व्याकरणस्य दर्शनमित्यर्थः । तत्रापि व्याकरणपदेन व्याख्यानोपसंख्यानादिविशिष्टं शास्त्रं व्याकरणपदेन ग्राह्यम् । तस्य दर्शनमित्यत्र कर्तरि षष्ठ्या समासे शास्त्रेण यद् यद् दृश्यते, तत् सर्वमपि दर्शनमेव भवेत् । अधिकरणस्य सम्बन्धत्वेन विवक्षया षष्ठ्यन्तेन समासे तु व्याकरणशास्त्रे यत्परात्मनः तत्सम्बन्धिनो वा दर्शनस्य साधकं तदेव दर्शनं स्यात् । एवं सति उक्तासु व्युत्पत्तिषु यः कोऽपि व्याकरणसम्बन्धी विषयः, स सर्वोऽपि दर्शनपदव्यपदेश्यः सिध्यति । अस्यां स्थितौ पञ्चानां वृत्तीनामन्येषां वा प्रकृतिप्रत्ययसन्धिसमासकारकादीनां सर्वेषां दर्शनत्वे न काचिद् बाधाऽऽपतिष्यति । किञ्च येन केनापि वैयाकरणेन दृष्टो व्याकरणे पदार्थो व्याकरणदर्शनपदव्यपदेश्यो भवेत्, तथा चेदं शास्त्रं व्याकरणदर्शनं कथयितुं शक्यते ।

चतुर्दशाधिकैकोनविंशतिशततमे ख्रीस्ताब्दे डाक्टरवेनिसमहोदयैः काशिक-राजकीयसंस्कृतमहाविद्यालयाध्यक्षैर्व्याकरणदर्शनगवेषणाय नियुक्तोऽभवम् । तत आरभ्य वर्षचतुष्टयं यावदपेक्षितान् ग्रन्थांस्तया दृष्ट्या पर्यालोचयम् ।

**व्याकरणदर्शनलेखनेतिहासः**

अष्टादशाधिकैकोनविंशतिशततमे ख्रीस्ताब्देऽत्रत्येनाधिकारिणा 'मया सह व्याकरणदर्शनं ग्रन्थरूपे परिणतं कुरु' इति साग्रहमापृष्टः प्रत्याख्यातवांस्तदीयां वाञ्छाम् ।

तत आरभ्य बीजरूपेण मदीयायां बुद्धौ पुष्टिमासादयन्नयं विषयः परिपक्वो ग्रन्थरूपं लब्धुं व्यग्रोऽभवत् ।

भगवत्प्रेरणया युक्तप्रान्तीयशिक्षामन्त्रिणः श्रीसम्पूर्णानन्दमहोदयाः सप्तचत्वारिंशदधिकैकोनविंशतिशततमे ख्रीस्ताब्दे विहारसंस्कृतसञ्जीवनसंस्थाया विशिष्टे वार्षिकोत्सवे सभापतिपदमलङ्कुर्वाणा मया एतद्विषयस्य सम्पूर्त्त्यै साग्रहमनुरुद्धा लक्ष्मण-पुरमाहूतवन्तो मां वैशद्येन विषयावबोधार्थम् ।

**नवीनप्रवृत्तेः पूर्वं समालोचितविषयादाधुनिकस्य महदन्तरम्**

तस्मिन्नेव वत्सरे अगस्तमासे मया पुनरप्यपेक्षितविषयाणां परिपुष्ट्यै ग्रन्थास्तद्-दृष्ट्या द्रष्टुमारब्धाः । पूर्वं ये विषयाः प्रतीकरूपेणासन् गवेषिताः, ते तु साम्प्रतं न रोचन्ते मे । द्वयोराकाशपातालयोरिव तारतम्यदर्शनात् ।

इदं च व्याकरणदर्शनं पाणिनिसूत्रं कात्यायनवार्त्तिकं पातञ्जलमहाभाष्यं निरुक्तं प्रातिशाख्यं शिक्षां वाक्यपदीयं लघुमञ्जूषां च प्राधान्येनावलम्ब्य प्रावीवृतम् ।

**एतस्य दर्शनस्योपक्षेपः सामयिकः**

ननु सत्सु परमप्रतिभाप्राचुर्यप्रणीतेषु शाब्दिकनिबन्धेषु चर्वितचर्वणवद् व्यर्थोऽयं नव्यग्रन्थग्रथनप्रयास इति चेत् न, सुकुमारबुद्धीनां परीक्षाग्रन्थमात्राभ्यासशीलानां छात्राणां तादृशनिबन्धाध्यापनमात्रलब्धपाटवानामध्यापकानां चक्षुरुन्मीलनाय अन्य-दर्शनचर्चालब्धचातुरीकाणां शास्त्रिप्रवराणामाश्चर्यविस्फारितलोचनावस्थोत्पादक-चमत्काराय 'ग्रामं गच्छंस्तृणं स्पृशति' इति न्यायेनेषदवभासितसंशयाक्रान्तव्याकरणा-गमविषयाणामधिगतसर्वशास्त्रप्रमेयग्रामाणां पण्डितप्रवराणामेतद्विषयावबोधसौकर्याय पाश्चात्त्यविदुषां व्याकरणदर्शनीयविषयज्ञापनेन परमोपकृत्यै केवलं साधुशब्दसिद्धिरेव व्याकरणेनानुशिष्यते, न कश्चन दार्शनिकार्थविचारलेशोऽत्रास्तीति भ्रमविजृम्भिता-नामनल्पानां पण्डितकल्पानामविद्योत्सारणेन दृष्टिप्रदानाय स्वात्मनः सन्तुष्ट्यै गुरुवराणां चरणसरोरुहेषु समर्पणेन भृङ्गायमाणस्यैतस्य दर्शनस्य सम्पुष्ट्यै च प्रकृतप्रयत्नस्य साफल्यं बोध्यम् ।

अपि च महाभाष्ये विप्रकीर्णस्य मूलरूपेण तैरोहित्यच्छलेन विन्यस्तस्य वाक्यपदीये प्राञ्जलतया समुपपादितस्यापि प्रकृतप्रमेयस्य प्रतीकादिप्रदर्शनपरम्परया बीजव्यञ्जनाय पिण्डीभावेनाभीष्टोपहारीकरणाय चास्योद्योगस्य साफल्यमवधेयम् ।

**माधवाचार्येण पाणिनिदर्शनं न सम्यगुपन्यस्तम्**

यद्यपि च माधवाचार्येण सर्वदर्शनसंग्रहे[1] पाणिनिदर्शनमप्यन्यतमत्वेन न्यबन्धि; तथापि तत्र नैव कोऽप्यर्थो यथावन्निरूपितो येन प्रेक्षावतां जिज्ञासूनां लब्धपरम्परोत्कलिका शाम्येत् ।

**लघुमञ्जूषादिना च नास्य गतार्थता**

लघुमञ्जुषायां नागेशभट्टोऽपि बहून् विषयानधिकृत्य माधवाचार्यापेक्षयोत्तमां कोटिं नीत्वा तान् व्याख्यत्, परं तदपि नैव तादृशं प्रमोदास्पदमारोहति दर्शनान्तरीयसंस्कारेण लब्धसांकर्यतया स्वीयविषयाणां गह्वरान्धकारव्याप्तगुहायामिवोपलब्धेर्दूरापास्तत्वात् । वाक्यपदीयस्य चातिजटिलतयाऽशुद्धिबाहुल्येन च विषयावबोधनाक्षमत्वान्नैव विशुद्धतया स्वान्तामोदजनकत्वम् ।

**व्याकरणस्वरूपम्**

ननु किमिदं व्याकरणदर्शनं नाम ? किमस्य स्वरूपम् ? कश्चान्यैर्दर्शनैरस्य सम्बन्धः ? कश्च विषयः ? किं च फलम् ? कश्च सम्बन्धः ? को वाधिकारीति चिन्तायामुच्यते ।

परा-पश्यन्ती-मध्यमा-वैखरीतिभेदचतुष्टयेनाक्रान्तस्वरूपाश्चतस्रो वाचः सर्वत्रैव निगमागमादिषु समुपलभ्यन्ते । एतासामेव क्वचिद् व्याकृताव्याकृतेति भेदद्वयेन व्यवहारः । तत्र व्याकृतापदेन पश्यन्त्यादित्रय्याः, अव्याकृताशब्देन च शक्तिशक्तिमदादिभेदशून्यायाः पराया विचारो वेदेषु चर्चितः । तथा चैकैव परा[2] वाणी व्याकृताऽव्याकृतारूपभेदेन द्वेधा विभज्यते—**'नामरूपे व्याकरवाणि'**,[3] **'ते मृत्युमतिवर्तन्ते ये वै वाचमुपासते'** इति ।

---

१. तत्र पाणिनिदर्शने प्रथमं तत्प्रयोजनाद्युपन्यासः, ततः स्फोटस्य साधनम्, ततः सत्तायाः स्वरूपम्, ततो द्रव्यं पदार्थः, ततो जातिः, ततः शब्दानुशासनस्य निःश्रेयससाधनत्वप्रतिपादनम्, एतावदेव पाणिनिदर्शनं माधवाचार्येण निबद्धम् । नहि तावता व्याकरणस्य कोऽप्यंशस्तेनोपस्थितः ।

२. सूक्ष्मामर्थेनाप्रविभक्ततत्त्वामेकां वाचमनभिष्यन्दमानाम् ।
उतान्ये विदुरन्यामिव च पूतां नानारूपामात्मनि सन्निविष्टाम् ॥
(वा० प० १।१, टीकायाम्)

३. छा० उ० ६।३।२ ।

'एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यान् दिव इति पितॄंस्तिरः पवित्रमिति ग्रहानशव इति स्तोत्रं विश्वानीति शस्त्रमभिसौभगेत्यन्याः प्रजाः[1]', 'स मनसा वाचं मिथुनं समभवत्[2]' 'वागेव विश्वा भुवनानि[3]', 'वाग् वै ब्रह्म[4]', 'परावाचा तथाष्टमे[5]' इत्यादिश्रुतिभिः भूरादिमहाव्याहृत्युच्चारणपूर्वकतत्तत्सृष्टिप्रतिपादनपरैस्तत्रत्यैः कथानकैः ।

अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः[6] ॥

इत्यादिस्मृतिभिश्च वाक्पूर्विकैव सृष्टिरवगम्यते । तत्र वाक्पदेन पश्यन्ती एव ग्राह्या, तस्या एव ओंकारो वेदः शब्दब्रह्मेत्यादिनामान्तराणि । तथा चोक्तम्—

आपः[7] पवित्रं परमं पृथिव्या अद्भ्यः पवित्रं परमं हि मन्त्राः ।
तेषां च सामर्ग्यजुषां पवित्रं महर्षयो व्याकरणं निराहुः[8] ॥

अत्र जलापेक्षया सामर्ग्यजुर्लक्षणानां मन्त्राणां पावित्र्योक्त्या ततोऽपि पावनत्वम् ओङ्कारस्यैवाङ्गीकर्त्तव्यम् । तथा च स्पष्टमेव व्याकरणोंकारयोः पर्यायता लभ्यते । एतच्च वाक्यपदीये बहुषु स्थलेषु स्पष्टमिति विस्तरभयान्नाधिकमिहोच्यते ।

---

१. शा० भा० १।३।८ । २. बृ० उ० १।२।४ । ३. वा० प० १।१२१ (टीकायाम्) ।
४. बृ० उ० ४।१।२ । ५. एतत्सर्वमथर्वशीर्षोपनिषदि सम्यक्प्रपञ्चितम् ।
६. म० भा० शा० प० २५३ ।
७. अस्यार्थः—पृथिव्या आपः पवित्रम्, अद्भ्य ऋग्यजुःसामलक्षणा मन्त्राः पवित्रम्, ततोऽप्योंकारापरपर्यायं व्याकरणमिति ।

परन्त्वयमर्थः सम्यक् स्वान्ते नावतरति, पञ्चानां भूतानां मध्ये द्वयोः क्रमेण पवित्र्योक्त्याऽवशिष्टानामपि क्रमोक्तेरत्याज्यत्वादिति—"ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायो सामवेद आदित्यात्" (ऐतरेयब्रा० ५-३२), "अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् । दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ॥" (मनु० अ० १ श्लो० २३) इत्यादिश्रुतिस्मृतिभिरग्निवायुरविभ्य ऋग्यजुःसामोत्पत्तिश्रवणेन कार्यकारणयोरभेदोपचारेणर्ग्यजुःसामपदेन तत्कारणीभूतं भूतत्रयं गृह्यते । न च रवेरेव सामोत्पत्तिश्रुत्या आद्यभूताकाशस्य कारणत्वाभावादभेदोपचारेण कथं पूर्वसंशयापनोदनमिति वाच्यम्, रविपदेनाकाशस्यापि ग्रहणादत एव रौति शब्दं करोतीति व्युत्पत्त्या शब्दाश्रयत्वमेव तस्य प्रवृत्तिनिमित्तम् ।

वस्तुतस्तु रव्याकाशप्रकाशसूर्यादित्यादयः शब्दाः पर्याया एवासन् । आकाशते प्रकाशते इति मूलव्युत्पत्त्यनुरोधात् शब्दस्य ज्योतीरूपत्वस्य 'आख्यातोपयोगे' (पा० सू० १।४।२९) इति सूत्रभाष्यसम्मतत्वेन ज्योतिःशब्दयोरभेदेन तदाश्रयत्वस्याप्यभेदाच्च ।

८. वा० प० १।१४—टीकायाम् ।

**प्रकृतिप्रत्यययोर्वास्तविकं रूपम्**

तत्रैतामेव वाचमवधीकृत्य प्रकृतिप्रत्ययादिविभागः[1] प्रारभ्यते। अत्र प्रकृतिपदेन माता, प्रत्ययपदेन च पिता गृह्यते। तथा च वक्ष्यमाणयुक्तिप्रामाण्यात् प्रकृतिप्रत्ययौ शक्तिशक्तिमन्तौ, चिज्जडौ, वाच्यवाचकौ शब्दार्थौ नामरूपे पश्यन्तीप्रतिभाप्रणवेत्यादयः शब्दा व्याकरणापरपर्याया एव। एतच्चान्ते स्फोटविचारे यथावसरं स्फुटीभविष्यदपि संक्षेपेणेह किञ्चिदुच्यते।

मातृरूपायां प्रकृतौ पितृस्थानीयस्य प्रत्ययस्य संसर्गमन्तरा अर्थप्रत्यायन-सामर्थ्याभावादसाधुत्वाच्च—'**न केवला प्रकृतिः प्रयोक्तव्या न केवलः प्रत्ययः**[2]' इति न्यायेन केवलायाः प्रकृतेर्नैव व्यवहारसाधकत्वम्। एतस्य मूलतत्त्वं तु पश्यन्त्यामेवाव-तिष्ठते। तत्रैव सर्वेषां प्रत्ययानां सर्वासां प्रकृतीनां च सम्भूतिस्थानम्। अर्थात् तस्या एव पश्यन्त्या रूपद्वयं चकास्ति व्याकरणागमसंस्कारसंस्कृतचेतसां विदुषाम्। एकं प्रकृतिरूपमुपादानकारणम्, अपरञ्च प्रत्ययरूपं निमित्तकारणम्।

**अर्थपरम्परापि तत्रानुस्यूता**

इदं च परम्पराद्वयं पश्यन्तीमेव कामधेनुमाश्रित्य प्रवर्तते। तत्रैका प्रकृतिपरम्परा, अपरा च प्रत्ययपरम्परा। एतयोश्च परम्परयोरर्थपरम्पराऽप्यनुस्यूतैव व्यवतिष्ठते, शब्दार्थसम्बन्धस्य नित्यत्वात्। तथा चान्यतरस्य कारणस्याभावे नैव बीजरूपेण स्थित-स्याप्यर्थस्याभिव्यङ्ग्यत्वं सम्भवति।

---

१. 'जनिकर्तुः प्रकृतिः' (पा० सू० १।४।३०) इति सूत्रभाष्यादिपर्यालोचनया प्रकृतिपदेनो-पादानकरणम्। "अभावप्रत्ययालम्बना वृत्तिर्निद्रा" (योग० पा० १ सू० १०) इति योग-सूत्रस्थवाचस्पत्येन प्रत्ययपदेन निमित्तकारणं गृह्यते। तथा चोक्तम्—"त्रयी विद्या कामधेनुः सा स्त्री भाषाक्षराऽस्वरा" इति प्राधानिकरहस्ये श्लो० २२।

भारतप्रामाण्याच्चास्या गोरूपत्वमुक्तं वाक्यपदीयटीकायाम्—

(क) गौरिव प्रचरत्येका रसमुत्तमशालिनी।
दिव्यादिव्येन रूपेण भारती गौः शुचिस्मिता॥ इति।

(ख) स्वरूपज्योतिरेवान्तः परा वागनपायिनी*।
तस्यां दृष्टस्वरूपायामधिकारो निवर्तते॥ इति। (वाक्य० १।१४३)

अपि च प्रकृतिशब्देन प्रधानं सत्त्वरजस्तमोरूपम्, प्रत्ययपदेन ज्ञानं पुरुषो वा। अत एव 'नहि केवला प्रकृतिः प्रयोक्तव्या, नापि केवलः प्रत्ययः' इति प्रवादोऽप्येतन्मूलक एव मन्तव्यः। यावता हि प्रत्ययस्य ज्ञानस्य सान्निध्येन प्रकृतौ कश्चन क्षोभः सञ्जायते, अयस्कान्तसन्निहिते लौह इव, अतो द्वयोः पृथग्भावो न युक्तिसङ्गतः (स्वोपज्ञटीका)।

२. महाभाष्यम्—१।२।६४।

---

* 'सूक्ष्मा' इति च पाठः।

**पराया व्यवहारातीतत्वम्**

परायां वाचि तु नैव कश्चन विचारलेशोऽपि सम्भावनास्पदमारोहति, दृष्टस्वरूपायां तस्यामधिकारनिवृत्तेरुपदेशात् । तस्याश्च द्वैतत्वे तद्वैयर्थ्यापत्तेरद्वैतज्ञानेनैवाविद्यानिवृत्तेर्निर्णीतत्वात् ।

**पश्यन्त्यामेव शक्तिशक्तिमतोश्चर्चा कालाख्या स्वातन्त्र्यशक्तिस्तत्रैव**

एवं च पश्यन्त्यामेव शक्तिशक्तिमतोश्चर्चा । तस्या एव कालाख्या स्वातन्त्र्यशक्तिः, या ह्यन्यासां शक्तीनां स्फोरणे प्रभवति; अविद्यादयः शक्तयोऽपि तद्विजृम्भितमित्युपरिष्टात् प्रकटीभविष्यति । वाच्यवाचकविभागोऽपि तस्यामेव व्यवह्रियते, तत्रैव समापन्नस्य योगिनः 'सर्वे सर्वार्थवाचकाः'इति ज्ञानमुत्पद्यते, तस्या एव पश्यन्तीरूपेण सर्वशब्दबीजत्वात्, प्रतिभारूपेण च सकलार्थप्रसवत्वाच्च । तदवस्थायां वैयाकरणानां निखिलार्थसमुत्पादनसामर्थ्यमभिव्यज्यते[1] । एतत्प्रकाशेनैवान्ये प्रकाशाः प्रकाशन्ते, तयोर्द्वयोरग्निसूर्ययोः स्वप्रकाशने सामर्थ्याभावात् । तथा चास्माकं मते जातवेदसोऽपि न स्वतः प्रकाशकत्वम्, किन्तु एतत्पारतन्त्र्येणेति स्वप्रकाश्यत्वे तेजोदृष्टान्तस्य गतिर्व्यावहारिकदृष्ट्यैव समर्थनीया ।

वस्तुतस्तु जातं वेदो ज्ञानं यस्मादसौ जातवेदा इति व्युत्पत्त्या जातवेदःशब्दोऽपि मुख्यया वृत्त्या ज्ञानमूलागारे परमात्मन्येव वर्तते । अग्नौ तत्प्रयोगस्तु—

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं मित्रं मातरिश्वानमाहुः ॥[2]

इति मन्त्रे अग्न्यादिशब्दानां परमात्मपरकत्वस्य व्यवस्थापितत्वात् समर्थनीयः ।

---

१. अत एव—

त्वदाश्रितानां जगदुद्भवस्थितिप्रणाशसंसारविमोचनादयः ।
भवन्ति लीलाविधयश्च वैदिकास्त्वदीयगम्भीरमनोऽनुसारिणः ॥

—(स्तोत्ररत्नम्, यतिवरश्रीयामुनाचार्यप्रणीतम्, श्लो० २०) इत्यत्रापि यतिवरैर्भक्तानां सृष्ट्यादिकरणसामर्थ्यं समुज्जृम्भत इत्युक्तम् ।

अत्रायं निष्कर्षः—गुरूपदेशपद्धत्या समाहितमनसा स्थितं योगिनं "यमेवैष वृणुते" (यजु० ४०।१४) इति रीत्या ज्ञानागारात्परमात्मन आयान्तो ज्ञानरश्मयः "ज्योतिर्वंज्ज्ञानानि भवन्ति" (भाष्यम्० १।४।२४) इति पतञ्जलिप्रोक्तसिद्धान्तानुसारं ज्योतिःस्वरूपास्ते परमात्मानं नयन्ति । तत्र स्थितश्च योगी विश्वदर्शनसामर्थ्यसम्पन्नः सञ्जायते ।

इममर्थम् "उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम्" (यजु० ७।४१) इति श्रुतिः परिपुष्णाति । उद्वहन्ति—समाधापयन्ति ।

वस्तुतस्तु कृतोद्वाहमुमापतिम् (वा०रा०का० १ स० २३ श्लो०११) इति पाठे उद्वाहशब्दो विवाहार्थक एव मन्तव्यः; परन्तु अन्यत्र उद्वाहशब्दस्य समाध्यर्थकत्वेन न काचिदापत्तिः ।

२. ऋ० सं० १।१६४।४६ ।

